**अथैकेषाम् । यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचेदभ्युदियाद्वा ॥ १३ ॥**

अन्येषां शाखिनां मतिः ॥ १३ ॥

इति सप्तमी कण्डिका

**"[1]मनो ज्योतिर्जुषताम्" "[2]त्रयस्त्रिंशत्तन्तवः" इति द्वे चतुर्गृहीते जुहुयात् ॥ १ ॥**

"मनो ज्योतिर्जुषताम्" इत्येकं चतुर्गृहीतं [1]हुत्वा "त्रयस्त्रिंशत्" इति द्वितीयम् अग्निहोत्रार्थ एव [2]विहृतेऽग्नौ, तदङ्गत्वात् । [क]इष्टयस्तु तन्त्रभिन्नाः । [3]तस्मात्तासामन्योऽग्निः । [ख]केचित्तु हुत्वा प्रायश्चित्तमग्निहोत्रार्थं प्रणयनम् । शाखान्तरस्थो विधिः विकल्प्यते सर्वत्र न [ग]समुच्चीयते ॥ १ ॥

**यस्य विप्रक्रान्तमहुतमग्निहोत्रं सूर्योऽभ्युदियाद्यथा विजनिष्यमाणो न विजनिष्यमाणो न विजायेत तादृक् तत् । आत्मानं वा ह यजमानो रुणद्धि सर्वज्यानिं वा जीयते । नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवस्सुवरित्युपतिष्ठेत । एकहायनो दक्षिणा ॥ २ ॥**

---

1. B. 3. reads गृहीत्वा.
2. B. 1. reads विहिते.
3. B. 2. तासामन्योऽग्निस्तस्मात्.

क. इमौ चतुर्गृहीतहोमौ अग्निहोत्रार्थमुद्धृत एवाग्नौ कार्यौ, तयोरग्निहोत्राङ्गत्वेन भिन्नतन्त्रत्वाभावात् । इष्टयस्तु भिन्नतन्त्राः । अतोऽन्यतरमुत्पादनीयम् ।

ख. हुत्वा प्रायश्चित्ताहुतिद्वयं पुनरग्निहोत्रार्थं प्रणयन्ति केचित् ।

ग. प्रतिपत्तृभेदेन निरपेक्षोपदेशान्न समुच्चयः । अयमत्र निष्कर्षः—आपदि होमकालातिपत्तौ अनुद्धृतप्रायश्चित्तहोमद्वयं बहुविदुद्धरणं वा कृत्वाऽग्निहोत्रहोमः । अनापदि होमकालातिपत्तौ अनुद्धृतप्रायश्चित्तं कालसमापादनीयञ्च कृत्वाऽग्निहोत्रहोमः । अत्रानुद्धृतप्रायश्चित्ताहुती द्वे एवेति केचित्, इतरस्य विरोधात् । तथाहि—प्रातःकालातिपत्तौ आहवनीयानुगमस्याङ्गत्वाच्चतुर्गृहीतमाज्यं पुरस्तादित्यत्र, नात्राहवनीयमनुगमयतीति तन् निषेधात् विरोधः । अन्ये त्वयं विरोधः प्रातःकाले, सायंकाले तु विरोधाभावाद्बहुविदुद्धरणमपि विकल्पेन कर्तव्यमित्याहुः । होमकालविशेषे सङ्कल्पितेऽनुद्धृते तत्कालातिपत्तौ अनुद्धृतप्रायश्चित्तं कालसमापादनीयञ्च कर्तव्यमिति ।

१ मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञं समिमं दधातु ॥
बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ॥ (तै. स. १.५.३.२.)

२ त्रयस्त्रिंशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते ॥
तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳ अप्येतु ॥ (तै. सं. १.५.१०.४.)

**विप्रक्रान्तम्** आरब्धमनुदिते होष्यामीति । [क]समिदाधानादि । [ख]परिषेचनादीत्युपदेशः । अहुतायाश्च पूर्वाहुतौ सूर्य उदेति, **यथा विजनिष्यमाणो** प्रसूयमानो **न** [1]**विजायेत तादृक्तत्** । अग्निहोत्रमार्तिगतं मन्येताध्वर्युः । [ग]यद्वाऽग्निहोत्रहोमोऽनर्थकः । यजमानो रुणद्धि [2]आध्मायन्तेऽस्य स्रोतांसि । [घ]सन्निरोधं प्राप्नोति । **सर्वज्यानिः** सर्वस्वहानिः । नित्यमग्निहोत्रमिति पूर्ववदुपस्थानान्तम् । **एकहायनः** एकवर्षः । [3]सा **दक्षिणा** अध्वर्योः ॥ २ ॥

**हुत्वा तदुद्वास्य पुनराधेयं तस्य प्रायश्चित्तिरित्याश्मरथ्यः ॥३॥**

हुत्वा वृष्ट्यन्तात्परं [4]होमं समाप्य तदुद्वास्य तत्परित्यज्य विधानेनाग्निजातं पुनराधेयं [5]प्रायश्चित्तिः । अनन्तरं [6]न वर्षासु । अन्याधेयमपि लभ्यते आलेखनमतादित्युपदेशः[ङ] ॥ ३ ॥

**अथैकेषाम्—[1]यद्यन्ते स्यादुद्वीय प्राङुदाद्रवेत् । स उपसाद्या तमितोरासीत । स यदा ताम्येदथ भूः स्वाहेति जुहुयात् । प्रजापतिर्वै भूतस्तमेवोपासरत्स एवैनं तत उन्नयति नार्तिमार्च्छति यजमान इति विज्ञायते ॥ ४ ॥**

---

1. B. 2. विजायते.
2. B. 1. आधीयन्ते तस्य.
3. B. 2. स.
4. B. 2. omits होमं.
5. B. 2. प्रायश्चित्तं.
6. B. 1. omits न.

क. अनुदिते होष्यामीति सङ्कल्प्य होमात्प्रागुदिते समिदाधानादि । उदितानुदितहोमयोः प्रणयनस्यानुदिते कर्तव्यत्वादुदितहोमे प्रणयनात्पूर्वमुदयस्यावश्यम्भावात्प्रक्रान्तमग्निहोत्रमिति निमित्तत्वानुपपत्तिः । समिदाधानादेस्तु पूर्वकालस्याविधानाद्धोमसमानकालत्वादनुदितहोमे सङ्कल्पिते प्राग्घोमादभ्युदये वक्ष्यमाणनैमित्तिकं भवतीति ।

ख. समिदाधान-शुन्धन-परिस्तरणानामनियतकालत्वात्परिषेचनादेर्नित्यवद्धोमसमानकालत्वात्तत्पूर्वमुदये नैमित्तिकमित्युपदेशमतम् ।

ग. आर्तिगतत्वात्क्रियमाणोऽप्यग्निहोमो निष्प्रयोजनः ।

घ. अग्निहोत्राकरणेन यजमानस्य स्रोतांसि मूत्रपुरीषादीनि आध्मायन्ते ऊच्छूनानि भवन्ति । तेन यजमानस्तेषां सन्निरोधं प्राप्नोति ।

ङ. 'यस्य वोभावनुगतौ' इत्यत्र पुनराधेयश्रुतेरन्याधेयेऽपि तुल्यतया आलेखनव्याख्यानादिह सूत्रानुक्तोऽपि स पक्षः कर्तव्य इत्युपदेशमतम् ।

1 तै. ब्रा. २.१.९.३.

[1]अथैकेषाम् । अस्मच्छाखामाह सूत्रकारः । तेन [2]खाण्डेयानधिकृत्य कृतं सूत्रम् । **यद्यन्ते स्यात्** यदि समीपे यजमानस्स्यात् । [3]स **उन्नीय स्वयं प्राङुदाद्रवेत्** [4]गच्छेदाहवनीयं प्रति **स उपसाद्य** व्याहृतिजपान्तं कृत्वा । **आ तमितोः** [5]आश्रमोपजननात्तिष्ठेत् । श्रान्तो [6]भूत्वा भूःस्वाहेति पूर्वाहुतिं जुहुयात् । प्रकृतिवदुत्तरा इत्यादि । प्रजापतिर्वै भूतो नित्यजातः [7]तमेवोपासरत् तमुपागच्छच्छरणम् । तस्य होमं कुर्वन् स एवैनं तत उन्नयति तस्माद् दोषादुद्धरति । ' नार्तिमाप्नोति यजमानः ' इति श्रुतिः । नात्राग्नित्यागः । प्राजापत्यं हविः प्रजापतिः प्रजामित्यूहः । परतोऽप्युन्नयनादौ असन्निहिते [8]यजमाने एतत्प्रायश्चित्तम् । उन्नयनादित्युपदेशः[क] ॥ ४ ॥

**यस्याग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे चतुरहे वाग्नये तन्तुमतेऽष्टाकपालं निर्वपेत् ॥ ५ ॥**

विच्छिन्नेऽ[9]ग्निहोत्रहोमे एकाहे द्व्यहे च ब्राह्मणोक्तमपि लभ्यते " [ख]उतैकाहमुत[1] द्व्यहं न [10]जुह्वति " इति । परतश्च त्रिरात्रादग्न्याधेयमेव, अग्निहोत्रस्याग्निप्रत्यर्थत्वात् । अग्नये तन्तुमते, अग्ने तन्तुमन्, अग्निं तन्तुमन्तम्, अग्नेस्तन्तुमतः, अग्निस्तन्तुमानिदम् ॥ ५ ॥

**[2]स्वयं कृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः । प्रत्नं सधस्थमनुपश्यमान आ तन्तुमग्निर्दिव्यं ततान । त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाऽग्ने पृष्ठं वयमारुहेमाथा देवैः सधमादं मदेमेति याज्यानुवाक्ये ॥ ६ ॥**

" स्वयं कृण्वानः सुगम् " " त्वं नस्तन्तुः " इति प्रधानस्य ॥ ६ ॥

---

1. B. 1 reads अथैकेषामित्यस्माच्छाखा.
2. B. 2. reads खाण्डिकेयान्.
3. B. 1. तदुन्नीय.
4. B. 2. अनुगच्छेत्.
5. B. 2. आश्रमाद्यजमान°.
6. B. 2. omits भूत्वा.
7. B. 1. उपासरेत्तमुपागच्छेत्.
8. B. 2. reads सन्निहिते लक्ष्यत एतत्.
9. B. 2. अग्निहोत्रस्य.
10. B. 1. जुहोति.

क. उन्नयनादिनैमित्तिकनिर्देशान्नित्यमग्निहोत्रमित्यादिपूर्वो विधिरसन्निहिते यजमान इत्युपदेशमतम् ।

ख. " तस्माद्यस्यैवं विदुषः उतैकाहमुत द्व्यहंन जुह्वति हुतमेवास्य भवति " इति वचनादग्निहोत्रब्राह्मणार्थविदुष आपदि होमचतुष्टयाकरणेऽपि न दोष इति ।

१ तै. ब्रा २.१.७.५.

२ तै. ब्रा. २.४.२ ५.

**"[1]तन्तुं तन्वन्" "[2]उद्बुध्यस्वाग्ने" "[3]उदुत्तमम्" "[4]उद्वयं तमसस्परि" "[5]उदुत्यं" "[6]चित्रम्" इत्युपहोमाः ॥ ७ ॥**

"तन्तुं तन्वन्" "उद्बुध्यस्वाग्ने[1]" "उदुत्तमम्" "उद्वयं तमसस्परि" "उदुत्यं" "चित्रम्" इत्युपहोमाः पठ्येते ॥ ७ ॥

**हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृतमाहुवेम ॥ स्विष्टमग्ने अभि तत्पृणाहि विश्वा देव पृतना अभिष्या उरुं नः पन्थां प्रदिशन्वि भाहि ज्योतिष्मद्धेह्यजरं न आयुरिति सांयाज्ये ॥ ८ ॥**

नारिष्ठान् हुत्वा 'हव्यवाहं स्विष्टम्' इति स्विष्टकृतः । यद्यभिध्रीयते[2] तत एतत्प्रायश्चित्तम् । अनुगते भूयोऽनुगमनप्रायश्चित्तं पुनराधेयमग्न्याधेयं वा ॥ ८ ॥

इत्यष्टमी कण्डिका

इत्यापस्तम्बीयश्रौतसूत्रीयधूर्तस्वामिभाष्ये द्वितीयः पटलः ॥

---

1. B. 2. reads इत्यादिकान् षडुपहोमान् हुत्वा नारिष्ठान्.
2. B. 2. reads यद्यभ्रियत एतत्प्रायश्चित्तमन्यथा पुनराधेयमग्न्याधेयं वा ।

१ तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ (तै. सं. ३.४.२.२.)

३ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ (तै. सं. १.५.११.३.)

४ उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (तै. ब्रा. २.४.४.९.)

५ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥

६ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ (तै. सं. १.४.४३.१.)